नवमः पाठः

# मदालसा

प्रस्तुत पाठ जम्मूविश्वविद्यालय से अवकाश प्राप्त आचार्या वेदकुमारी घई द्वारा रचित 'पुरन्ध्रीपञ्चकम्' नामक रूपकसंग्रह से संकलित किया गया है। 'पुरन्ध्रीपञ्चकम्' आधुनिकनाट्यपरम्परा में एक सामयिक विषयों से सम्बन्धित रोचक एवं शिक्षाप्रद रूपकों का संग्रह है। प्रस्तुत पाठ में 'पुरन्ध्रीपञ्चकम्' के तृतीय-रूपक 'मदालसा' के कुछ अंशो का संकलन किया गया है जिसमें राजकुमार ऋतध्वज तथा मदालसा के संवाद के माध्यम से राजकुमारी मदालसा के स्वाभिमान एवं नारी अस्मिता का एक नए परिप्रेक्ष्य में सुन्दर चित्रण किया गया है।



*(ततः प्रविशति प्रकृतिसौन्दर्यमवलोकयन् महाराजस्य शत्रुजितः पुत्रः ऋतध्वजः)*

ऋतध्वजः – अहो शोभनं गन्धर्वराजविश्वावसोः राजोद्यानम्। आम्रमञ्जरीणां परां शोभां दृष्ट्वा कोकिलानां च मधुरवचांसि श्रुत्वा कस्य यूनो हृदयं सहसा उत्कण्ठितं न भविष्यति?

वामपार्श्वे रमणीनामालाप इव श्रूयते। अत्रैव स्थित्वा श्रोष्यामि।

कुण्डला – सखि मदालसे! त्वं तु केवलं विद्याध्ययने एव रता कियन्तं कालं यावत् ब्रह्मचर्यव्रतं धारयिष्यसि?

मदालसा – ज्ञानोदधिस्तु अनन्तपारो गभीरश्च। मया सागरतटे स्थित्वा कतिपयबिन्दव एव प्राप्ता अद्यावधि।

कुण्डला – विनयशीले! विद्या ददाति विनयम् अत एव एवं भणसि। कुलगुरु-तुम्बरुमहाभागैस्तु गन्धर्वराजाय अन्यदेव सूचितम्।

मदालसा – किं श्रुतं त्वया यद् गुरुवर्यैः माम् अधिकृत्य पित्रे कथितम्?

कुण्डला – अथ किम्। राजकुमारी मदालसा सर्वविद्यानिष्णाता जाता परं तया स्वयं वरः न प्राप्तः अतः तस्यै योग्यवरस्य अन्वेषणं कार्यम् इत्यासीद् गुरुपादानां मतम्।

मदालसा – (*हसित्वा*) नहि जानन्ति ते यदहं तु विवाहबन्धनं स्वीकर्तुं न इच्छामि।

कुण्डला – किं करिष्यसि तदा।

मदालसा – ब्रह्मवादिनी भविष्यामि। आचार्येतिपदं प्राप्य शिष्येभ्यः जीवनकलां शिक्षयिष्यामि।

कुण्डला – जाने तेऽभिरुचिम् अध्ययने अध्यापने च। परं यथा लतेयं सहकारमवलम्बते तथैव नारी जीवनयात्रायां कमपि सहचरम् अपेक्षते यः तस्याः अवलम्बनं स्यात्।

मदालसा – नास्ति मत्कृते आवश्यकता अवलम्बनस्य। स्वयं समर्था जीवनपथे चलितुमहं न कस्यापि सङ्केतैः नर्तितुं पारयामि।

कुण्डला – नर्तिष्यसि तदा एकाकिनी एव।

**मदालसा** – (*विहस्य*) यदि त्वं शीघ्रमेव पतिगृहं गमिष्यसि तदा एकाकिनी भविष्यामि परं एकः उपायः अपि चिन्तितः मया।

**कुण्डला** – कः उपाय?

**मदालसा** – सङ्गीतसाहित्यमाध्यमेन ब्रह्मविद्यां सरसां विधाय बहुभ्यः शिशुभ्यः शिक्षणं प्रदास्यामि।

**कुण्डला** – गृहस्थाश्रमं प्रविश्य स्वशिशूनां चरित्रनिर्माणं मातुरधीनम्। तत्र का विचारणा?

**मदालसा** – यथाहं पश्यामि पुरुषः भार्यायां स्वाधिपत्यं स्थापयति। द्रौपदीं स्वीयां सम्पत्तिं मन्यमानः युधिष्ठिरः तां द्यूते हारितवान् यथा सा निर्जीवं वस्तु आसीत्।

**कुण्डला** – निर्जीवं तु नासीत् परं युधिष्ठिरस्य एषा एव चिन्तनसरणिः आसीत् इति प्रतीयते।

**मदालसा** – हरिश्चन्द्रः स्वपत्नीं शैव्यां, पुत्रं रोहितं च जनसङ्कुले आपणे विक्रीतवान्। नास्ति मे मनोरथः ईदृशं पत्नीपदमङ्गीकर्तुम्।

**कुण्डला** – कटुसत्यं खल्वेतत्। परं सखि! अस्मिन् संसारे विभिन्नप्रकृतिकाः पुरुषा वसन्ति। स्वप्रकृत्यनुकूलः वरः अपि प्राप्यते। त्वं तु नवनवोन्मेषशालिन्या प्रतिभया विहितैः नूतनैः प्रयोगैः अस्मान् सर्वान् विस्मापयसि। गृहस्थाश्रमोऽपि एका प्रयोगशाला यस्यां त्वं स्वज्ञानविज्ञानयोः प्रयोगं कर्तुं शक्ष्यसि।

**मदालसा** – कुण्डले! दुर्लभो जनः ईदृशः यः गृहस्थप्रयोगशालायां स्वपत्न्यै स्वतन्त्रतां दद्यात्।

**ऋतध्वजः** – (*स्वगतम्*) अवसरोऽयमात्मानं प्रकाशयितुम्। (*प्रकाशम्*) उपस्थितोऽहं शत्रुजितः पुत्रः ऋतध्वजः आज्ञा चेत् अहमपि अस्यां परिचर्चायां सम्मिलितो भवेयम्।

**कुण्डला** – स्वागतम् अतिथये। अपि श्रुताः भवद्भिः मम सखीविचाराः?

ऋतध्वजः - आम्! अत एव प्रष्टुमुत्सहे किं गन्धर्वराजविश्वावसुमहाभागाः अपि स्वपत्नीं युधिष्ठिर इव हारितवन्तः हरिश्चन्द्र इव विक्रीतवन्तः?

कुण्डला - मदालसे तूष्णीं किमर्थं तिष्ठसि? देहि प्रत्युत्तरम्।

ऋतध्वजः - एकस्य अपराधेन सर्वा जातिः दण्ड्या इति विचित्रो न्यायः तव सख्याः।

मदालसा - अत्रभवन्तः नारीस्वाधीनतामधिकृत्य किं कथयन्ति?

ऋतध्वजः - माता एव प्रथमा आचार्या इत्यस्ति मे अवधारणा। नारी एव समस्तसृष्टेः निर्मात्री। परं कथनेन किम्? परीक्ष्य एव ज्ञास्यति अत्रभवती। परीक्षार्थमुद्यतोऽस्मि गृहस्थाश्रमप्रयोगशालायाम्।

मदालसा - स्वीकृतः प्रस्तावः।

कुण्डला - दिष्ट्या वर्धेथां युवाम्। मित्रवर, गन्धर्वकन्या मदालसा गान्धर्वविवाहविधिना वृणोति अत्रभवन्तम्। आकारये अहं कुलगुरुं तुम्बुरुम्। असौ अग्निं साक्षीकृत्य आशीर्वचांसि वक्ष्यति।

ऋतध्वजः - प्रथमं तु सखीवचनं श्रोष्यावः। तदनु स्वयमेव कुलगुरुं पितरौ च सभाजयितुं गमिष्यावः।

कुण्डला - परस्परप्रीतिमतोः भवतोः उपदेशस्य नास्ति कोऽपि अवकाशः तदापि सखीस्नेहः मां भाषयति–भर्त्रा सदैव भार्या भर्तव्या रक्षितव्या च। यतो हि धर्मार्थकामसंसिद्धये यथा भार्या भर्तुः सहायिनी भवति तथा न कोऽपि अन्यः। परस्परमनुव्रतौ पतिपत्न्यौ त्रिवर्गं साधयतः। पतिः यदि प्रभूतं धनम् अर्जयित्वा गृहमानयति तत् खलु पत्न्यभावे कुपात्रेषु दीयमानं क्षयमेति।

ऋतध्वजः - लक्ष्म्याः रक्षार्थं पत्न्याः सहयोगः अनिवार्यः।

मदालसा - कुण्डले! लक्ष्मीपूजायां न मे प्रवृत्तिः। यदि लक्ष्मीः पूज्या प्रिया च अतिथिवर्यस्य, तदा इदानीमेव मे नमस्कारः।

ऋतध्वजः - स्वाभिमानिनि प्रिये! समक्षं ते कथं कापि सपत्नी स्थातुं शक्नोति? लक्ष्मीस्तु तव दासी भविष्यति नैव सपत्नी। मद्गार्हस्थ्यं तु त्वदधीनं भविष्यति। आत्मानं भाविसन्ततिं च ज्ञानविज्ञानानुसन्धात्र्या हस्ते समर्पयितुमीहे। आगम्यताम् गुरुभ्यः पितृभ्यां च समाचारं श्रावयावः।

## शब्दार्थाः टिप्पणयश्च

| | | |
|---|---|---|
| **राजोद्यानम्** | – | राजा + उद्यानम्, राज्ञः उपवनम्, राजा का उद्यान। |
| **आम्रमञ्जरीणाम्** | – | आम्रस्य मञ्जरीणाम् ष. तत्पु., आम की बौरों का। |
| **मधुरवचांसि** | – | मधुराणि वचांसि, कर्मधारय, मधुरवचनों को। |
| **यूनः** | – | युवन् शब्द, ष.ए.व., तरुणस्य, युवक का। |
| **रमणीनाम्** | – | स्त्रीणाम्, युवतियों का। |
| **आलापइव** | – | आलापः + इव, वार्तालाप सा। |
| **रता** | – | रम् + क्त, स्त्री.प्र.ए.व., संलग्नाः, तत्पर। |
| **श्रूयते** | – | श्रु + कर्म वा. लट्, प्र.पु.ए.व., सुना जाता है। |
| **स्थित्वा** | – | स्था + क्त्वा, ठहरकर। |
| **कियन्तं** | – | कियत् द्वि.ए.व., कुछ। |
| **अनन्तपारो** | – | न अन्तपारौ यस्य सः, ब.व्री. समास, आदि अन्त रहित। |
| **गभीरश्च** | – | गभीरः + च, गंभीर। |
| **कतिपय बिन्दवः** | – | कतिपये बिन्दवः, कर्मधारय, कुछ अंश। |
| **सूचितम्** | – | सूच् + क्त, निवेदितम्, सूचित किया। |
| **सर्वविद्यानिष्णाता** | – | सर्वासु विद्यासु निष्णाता तत्पु., सभी विद्याओं में निपुण। |
| **जाता** | – | जन् + क्त, स्त्री. प्र. ए.व. हो गई है। |
| **अन्वेषणं** | – | अनु + इष् + ल्युट्, नपुं. प्र.ए.व., गवेषणम्, खोज। |
| **ब्रह्मवादिनी** | – | ब्रह्मवदितुं शीलं यस्याः सा ब्रह्मन् + वद् + णिच् + णिनि स्त्री., प्र.ए.व., वेदान्त में निपुण। |
| **प्राप्य** | – | प्र + आप् + क्त्वा + ल्यप्, अधिगत्य, पाकर। |
| **शिक्षयिष्यामि** | – | शिक्ष + णिच्, लृट्, उ.पु., ए.व., शिक्षा दूंगी। |
| **तेऽभिरुचिम्** | – | ते + अभिरुचिम्, तुम्हारी लगन को। |
| **अध्ययने** | – | अधि + इ + ल्युट्, स.ए.व., पठने, पढ़ने में। |
| **अध्यापने** | – | अधि + इ + णिच् + ल्युट्, स.ए.व., पाठने, पढ़ाने में। |
| **अपेक्षते** | – | अप + ईक्ष, लट् प्र.पु.ए.व., आवश्यकता का अनुभव करती है। |

| | | |
|---|---|---|
| **जीवनपथे** | – | जीवनस्य पन्थाः जीवनपथः, ष.तत्पु., तस्मिन्, जीवन मार्गे, जीवन के रास्ते पर। |
| **नर्तितुम्** | – | नृत् + तुमुन्, नाचने के लिए। |
| **एकाकिनी** | – | एकाकिन्, स्त्री. प्र.ए.व., अकेली। |
| **सरसां** | – | रसेन सहितां, बहुव्रीहि समास, रसयुक्त। |
| **विधाय** | – | वि + धा + क्त्वा, ल्यप्, कृत्वा करके। |
| **स्वाधिपत्यं** | – | स्वस्य आधिपत्यम्, ष.तत्पु., अपना स्वामित्व। |
| **हारितवान्** | – | हृ + णिच् + क्तवत्, पु.प्र.ए.व., हरवा दिया। |
| **युधिष्ठिरस्य** | – | युधि + स्थिरः, युधिष्ठिरः अलुक् तत्पु., तस्य। |
| **सरणिः** | – | मार्गः, रास्ता। |
| **प्रतीयते** | – | प्रति + इ, कर्मवाच्य, लट् प्र.पु.ए.व. प्रतीतो भवति, प्रतीत होता है। |
| **जनसङ्कुले** | – | जनैः सङ्कुले, तृ.तत्पु., भीड़ से भरे हुए। |
| **विभिन्न प्रकृतिकाः** | – | विभिन्न प्रकृतिः येषां ते ब.व्री., भिन्नस्वभावः, भिन्न-भिन्न स्वभाव वाले। |
| **स्वप्रकृत्यनुकूलः** | – | स्वप्रकृति + अनुकूलः, स्वस्य प्रकृत्या अनुकूलः, अपने अनुकूल स्वभाव वाला। |
| **नवनवोन्मेषशालिन्या** | – | नवनवेन उन्मेषेण शालते या सा तया, नई नई चमकवाली। |
| **विस्मापयसि** | – | वि + स्मि + णिच् + लट्, म.पु., ए.व., चकितम् करोषि, आश्चर्यचकित कर रही हो। |
| **शक्ष्यसि** | – | शक् + लृट्, म.पु.ए.व., समर्थ होंगे। |
| **प्रष्टुम्** | – | प्रच्छ् + तुमुन्, पूछने के लिए। |
| **अवधारणा** | – | अव + धृ + णिच् + ल्युट्, धारणा, विचार धारा। |
| **निर्मात्री** | – | निर् + मा तृच् + स्त्री., निर्माण करने वाली। |
| **आकारये** | – | आ + कृ + णिच्, लट्, प्र.पु.ए.व., बुलाता हूँ। |
| **पितरौ** | – | माता च पिता च, द्वन्द्व, माता और पिता। |
| **धर्मार्थकामसंसिद्धये** | – | धर्मः च अर्थः च कामः च धर्मार्थकामाः, तेषां संसिद्धये, धर्म, अर्थ, काम की सिद्धि के लिए। |

| | | |
|---|---|---|
| **पतिपत्न्यौ** | – | पतिः च पत्नी च द्वन्द्व समास, पति पत्नी। |
| **दीयमानम्** | – | दा + कर्मवाच्य, शानच्, नपुं.प्र.ए.व., दिया जाता हुआ। |
| **समक्षम्** | – | अक्ष्णोः सम्मुखम्, अव्ययीभाव, समास। |
| **सपत्नी** | – | समानः पतिः यस्याः सा, सौत। |
| **त्वदधीनम्** | – | तव अधीनम् ष.तत्पु., तुम्हारे अधीन। |
| **ज्ञानविज्ञानानुसन्धात्र्या** | – | ज्ञानस्य विज्ञानस्य च अनुसन्धात्र्याः, ष.तत्पु., ष.ए.व. ज्ञान विज्ञान की खोज करने वाली का। |
| **ईहे** | – | ईह् धातु, लट् उ.पु., ए.व., चाहता हूँ। |

## अभ्यासः

**1. एकपदेन उत्तरत–**

(क) उद्यानं कस्य आसीत्?

(ख) कः आम्रमञ्जरीणां शोभां दृष्ट्वा कूजति?

(ग) का विद्याध्ययने रता आसीत्?

(घ) का विनयं ददाति?

(ङ) का सर्वविद्यानिष्णाता आसीत्।

(च) मदालसा किं स्वीकर्तुं न इच्छति?

(छ) शिशूनां चरित्रनिर्माणं कस्याः अधीनम्?

(ज) कः भार्यायां स्वाधिपत्यं स्थापयति?

(झ) युधिष्ठिरः कां द्यूते हारितवान्?

(ञ) कः परिचर्चायां सम्मिलितः अभवत्?

**2. पूर्णवाक्येन उत्तरं ददत–**

(क) कुलगुरुतुम्बरुः मदालसायाः विषये किं कथितवान्?

(ख) मदालसा विवाहबन्धनं तिरस्कृत्य किं कर्तुम् इच्छति?

(ग) ऋतध्वजः स्वपरिचयं कथं ददाति?

(घ) ऋतध्वजस्य नारीं प्रति का धारणा आसीत्?

(ङ) कस्याः रक्षार्थं पत्न्याः सहयोगः अनिवार्यः अस्ति?

(च) ऋतध्वजः लक्ष्म्याः वर्णनं कथं करोति?

**3. रेखाङ्कितपदानि आधृत्य प्रश्ननिर्माणं कुरुत-**

(क) यूनोः हृदयं उद्यानस्य शोभां दृष्ट्वा उत्कण्ठितं भवति।

(ख) मदालसा ज्ञानस्य कतिपयबिन्दून् एव प्राप्तवती।

(ग) कुलगुरुतुम्बरुमहाभागैः गन्धर्वराजाय सूचितम्।

(घ) मदालसा शिष्यान् जीवनकलां पाठयितुम् इच्छति।

(ङ) मदालसा जीवने सङ्केतैः नर्तितुं न इच्छति स्म।

(च) पुरुषः भार्यायां स्वाधिपत्यं स्थापयति।

(छ) युधिष्ठिरः द्रौपदीं द्यूते हारितवान्।

(ज) हरिश्चन्द्रः पुत्रं जनसङ्कुले आपणे विक्रीतवान्।

(झ) अस्मिन् संसारे विभिन्नप्रकृतिकाः पुरुषाः वसन्ति।

(ञ) लक्ष्म्याः रक्षार्थं पत्न्याः सहयोगः अनिवार्यः।

**4. विशेषणं विशेष्येण सह योजयत-**

| | |
|---|---|
| (क) गभीरः | धनम् |
| (ख) सर्वविद्यानिष्णाता | ऋतध्वजः |
| (ग) विभिन्नप्रकृतिकाः | आपणे |
| (घ) निर्जीवम् | ज्ञानोदधिः |
| (ङ) जनसङ्कुले | पुरुषाः |
| (च) शत्रुजितः | मदालसा |
| (छ) अनुव्रतौ | वस्तु |
| (ज) प्रभूतम् | पतिपत्न्यौ |

**5. प्रकृतिप्रत्यययोः विभागं कुरुत-**

यथा – स्थातुम् = स्था + तुमुन्

(क) दृष्ट्वा

(ख) श्रुत्वा

(ग) स्थित्वा

(घ) अधिकृत्य

(ङ) स्वीकर्तुम्

(च) नर्तितुम्

(छ) विधाय

(ज) मन्यमानः

(झ) कर्तुम्

(ञ) रक्षितव्या

**6. अधोलिखितानि वाक्यानि कः कं प्रति कथयति**

| | *कः कथयति* | *कम् प्रति* |
|---|---|---|
| **यथा - त्वं तु केवलं विद्याध्ययने एव रता** | **मदालसा** | **कुण्डलाम्** |
| (क) आचार्यापदं प्राप्य शिष्यान् जीवनकलां शिक्षयिष्यामि | ............... | ............... |
| (ख) नारी जीवनयात्रायां कमपि सहचरमपेक्षते | ............... | ............... |
| (ग) अहम् न कस्यापि सङ्केतैः नर्तितुं पारयामि | ............... | ............... |
| (घ) किं गन्धर्वराजविश्वावसुमहाभागाः अपि स्वपत्नीं युधिष्ठिरः इव हारितवन्तः हरिश्चन्द्र इव विक्रीतवन्तः? | ............... | ............... |
| (ङ) एकस्य अपराधेन सर्वा जातिः दण्ड्या इति विचित्रो न्याय तव सख्याः | ............... | ............... |

**7. हरिश्चन्द्रः समाजे कैः गुणैः प्रसिद्ध आसीत्।**

**8. नारीं प्रति ऋतध्वजस्य का धारणा आसीत्।**

## योग्यताविस्तारः

मदालसा पौराणिक कथासु आदर्शनार्या उदाहरणं प्रस्तौति।

तया स्वपुत्रस्य चरित्रनिर्माणाय महान् प्रयासः कृतः। तथाहि शैशवे पुत्राय कथितः तस्याः अयं श्लोकः निद्रागीतेः (लोरी गीतेः) प्रसिद्धम् उदाहरणम्।

**शुद्धोऽसि बुद्धोऽसि, निरंजनोऽसि।**
**संसारमाया परिवर्जितोऽसि।**
**संसारस्वप्नं त्यज मोहनिद्रां**
**मदालसा वाक्यमुवाच पुत्रम्।।**